जीवन्मुक्तगीतिः
शराङ्कवसुचन्द्रवर्षे फेब्रुअरीमासस्य पञ्चदशदिने न्यूयार्क-
नगरे  रचिता जीवन्मुक्तगीतिः भण्डारकरोपाह्वत्र्यम्बकशर्मणा
संस्कृतश्लोकेषु अनूदिता

चेत्ताडितोऽस्ति भुजगः कुरुते फणां स्वां
वह्निर्ज्वलत्यतितरां चलितेन्धनः सन् ।
व्योमान्तरं च भवति प्रतिनादयुक्तं
मर्माहताकुपितकेसरिगर्जितेन- ॥ १॥

विद्युद्विदारितहृदम्बुदराजिरम्भः
पूरेण पूरिततलां जगतीं विधत्ते ।
पर्याकुलं भवति चेन्नितरां तवान्त-
स्तत्त्वं ध्रुवं प्रकटयन्ति महन्महान्तः ॥ २॥

म्लानं मनो भवतु, मन्दतरा च दृष्टिः,
प्रेम प्रतारकमथाफलमस्तु सख्यम् ।
आपच्छतं क्षिपतु दैवगतिः स्वकीयं
सान्द्रं तमोऽप्यवरुणद्धु समृद्धिमार्गम्- ॥ ३॥

कोपाहितभ्रुकुटिभङ्गपदं विहन्तुं
कुर्याद्यदि प्रकृतिरद्य न विस्मरेस्त्वम् ।
दिव्योऽसि याहि सुहृदग्रत एव नित्यं
नो वामदक्षिणदिशौ पुरतस्तु लक्ष्यम् ॥ ४॥

देवोऽपि नास्मि मनुजो न पशुस्तथाहं
नारी न चास्मि च पुमान्न मनः शरीरम् ।
शास्त्राणि विस्मयपराणि मम स्वरूपं
नालं प्रकाशयितुमद्य यतोऽस्मि सोहम् ॥ ५॥

पूर्वं दिवाकरनिशाकरजन्मतोऽपि
प्राग्धूमकेतुगणतारकमवृन्दसूतेः ।
दिक्कालयोरपि यदा न जनिस्तदानो-
मासं तथा``ह''मधुना भविता च नित्यम् ॥ ६॥

भूः शोभना, किरणभास्वरभास्करोऽपि
चन्द्रः प्रकाशमधुरो वियदुज्ज्वलं च ।
हेतोरधीनमखिलं विचरत्यभीक्ष्णं

बन्धेन जीवति पुनर्विलयं प्रयाति- ॥ ७॥

विस्तार्य कञ्चुकमिव स्वमसत्यजालं
तेषामुपर्यथ च तानि दृढं गृहीत्वा ।
भूस्वर्गलोकनिरयान्सदसच्च चित्तं
चित्रं सदा वयति नैकविचारसूत्रैः ॥ ८॥

दिक्कालकार्यकरणादिकमेव सर्वं
जानीहि मित्र! बहिरावरणं न सत्यम् ।
अस्मीन्द्रियादपि परो मनसो विचाराद्
द्रष्टाखिलस्य जगतः खलु साक्षिरूपः ॥ ९॥

द्वैतं बहुत्वमसदस्ति सदेकमेवं
मय्येव विश्वमखिलं ह्यहमेव सर्वम् ।
द्वेषो न चास्ति मयि नापि विभिन्नभावो
मत्तो यतोऽस्ति न परं प्रियतामयोऽहम् ॥ १०॥

स्वप्नं त्यजेस्त्वमिह बन्धनमुक्तिहेतोः
गूढं निबोध तव नास्ति भयावकाशः ।
छाया ममैव किमु साध्वसकारणं स्यात्?
``सोऽहं" न चान्यदिति चिन्तय नित्यमेव ॥ ११॥